# ॥ श्रीवेङ्कटेशद्वादशनामस्तोत्रम् ॥
ब्रह्माण्डपुराणान्तर्गतम्

अस्य श्रीवेङ्कटेशद्वादशनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः
अनुष्टुप् छन्दः श्रीवेङ्कटेश्वरो देवता । इष्टार्थे विनियोगः ॥

नारायणो जगन्नाथो वारिजासनवन्दितः ।
स्वामिपुष्करिणीवासी शन्ङ्खचक्रगदाधरः ॥ १॥

पीताम्बरधरो देवो गरुडासनशोभितः ।
कन्दर्पकोटिलावण्यः कमलायतलोचनः ॥ २॥

इन्दिरापतिगोविन्दः चन्द्रसूर्यप्रभाकरः ।
विश्वात्मा विश्वलोकेशो जयश्रीवेङ्कटेश्वरः ॥ ३॥

एतद्द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
दारिद्र्यदुःखनिर्मुक्तो धनधान्यसमृद्धिमान् ॥ ४॥

जनवश्यं राजवश्य सर्वकामार्थसिद्धिदम् ।
दिव्यतेजः समाप्नोति दीर्घमायुश्च विन्दति ॥ ५॥

ग्रहरोगादिनाशं च कामितार्थफलप्रदम् ।
इह जन्मनि सौख्यं च विष्णुसायुज्यमाप्नुयात् ॥ ६॥

॥ इति ब्रह्माण्डपुराणे ब्रह्मनारदसंवादे
वेङ्कटेशद्वादशनामस्तोत्रं सम्पूर्णम् ॥